# श्री
# भगवान्
# काल
# सहस्र
# नाम
# स्तोत्रम्



जलाली

Major Radha Krishna Raina,
With the Author's
Good Wishes.

J M Jalali

6-x-1970

# अथ श्री भगवान्काल सहस्रनामस्तोत्रम्




विरचयिता

पं० जलाली कौल जियालालः

मूल्यं रु० १)

नरेश आर्ट प्रैस, पक्का डंगा, जम्मू।

# अथ श्री कालसहस्रनामामुखम् ॥

इदं श्री कालसहस्रनाम सर्वं कालवादिनां कल्याणार्थं विरचितं अस्य नित्यपाठेन पाठकस्य भक्तस्य ईप्सिताभिलाषः सिद्ध्यते। कालवादिनः कालभक्ताश्च काल पूजा विषये सुपरिचिताः। आङ्गल-भाषायां प्रकाशनीयाया मद्रचनाया अध्ययनेन कालवादिनां मतं स्पष्टं ज्ञायते॥

श्री कालो भीषण रूपधरो भयङ्करो महाकालो नितान्तं जीवस्यान्तकर इति एतादृश्येन भावेन कदापि न दृष्टव्यो न च मन्तव्यः। श्रीकालस्य द्वेरूपे। भौतिकमभौतिकञ्च। द्रव्यात्मकमद्रव्यात्मकञ्च॥ भौतिकं स्पष्टं। अभौतिकं मार्गितव्यं। अन्तानन्त्यमस्य भौतिकं रूपं गुणञ्च। कालो हि जगत्कर्ता जगद्भर्ता जगद्धर्ता इति। हर्तृशब्देन सर्वनाशो वा मूलनाशो न विद्यते। केवलं विकारो विकारस्य विकारो निरन्तरं विकारः प्रस्तूयते। एतद्भौतिकं स्थूलरूपम्॥

अस्थूलं सत्यं। अनन्तानन्त्यमभौतिकं रूपं। तदेव ज्ञातव्यं परिमार्गितव्यञ्च। स एव ईश्वरो यन्ता नियन्ता स्वशक्तिं खं धृत्वा पञ्चभूतानि पञ्चतत्त्वानि प्रयुनक्ति। विपर्ययविकारः पुनर्विपरिणामे विलीयति। तदुद्भवनं। उद्भवनं सृष्टिरुच्यते। वस्तुतो विकार-

उद्गीयते । अभौतिकं नित्यंसत्यं विकारहीनं शान्तिमयं सुखानन्दरूपं कालयोगिनां शाश्वतालयं यं प्राप्य कालभक्तो न निवर्तते किन्तु तत्रैव रमते स्वेच्छयावर्तते च ॥

तं भगवन्तं कालमाद्यमध्यान्तरहितं देवं दिव्यात्मशक्तिं मनसा ध्यात्वा सर्वकालभक्तानां कालवादिनां च हितार्थं एतन्नाम सहस्रपाठेन प्रार्थये इति ।

जलाली निवास
करणनगर-श्रीनगरतः

निवेदकः
जलाली कौल जियाललः

★

# अथ श्री काल सहस्रनाम प्रारभ्यते ॥

## कालोहं

अस्य श्रीकालनामाष्टोत्तरसहस्रस्य अनन्त ऋषिः अनुष्टुप् छन्दः अक्षरात्मा देवता द्रव्यं बीजं खंशक्तिः सर्वमूलं कीलकं आत्मनो वाङ्मनः कायोपार्जितमलनिवारणार्थं भगवान् काल प्रीत्यर्थे अमुक कामना सिद्धयर्थे पाठे होमे वा विनियोगः ॥ अथ न्यासः ॥ कालोहं अङ्गुष्ठाभ्यां नमः इत्यादि ॥ अथ प्राणायामः कालोहमितिमन्त्रेण ॥ अथ ध्यानं ॥

किरीटिनं चक्रधरं चतुर्भुजंत्रिलोचनमक्षधरं सपात्रकम् । द्रव्यात्मकं शून्यमयं परात्परं नमामिकालं वरदं प्रसन्नभम् ॥ अथ गायत्री ॥ द्रव्यात्मकाय विद्महे खमात्मकाय धीमहि तन्नः सर्वव्यापकः प्रचोदयात ॥१॥ अथ पाठः ॥

कालोहं कालकालोहं कालरूपः कलात्मकः ।
कलनात्मककालज्ञः केवलः कालनायकः ॥१॥
चिदानन्दक्रियाज्ञानमिच्छाशक्तिस्वरूपकः ।
एकानेकोऽद्वयो नित्यो बुद्धयाऽपरिमितोऽमितः ॥२॥
अनाद्यानन्तकूटस्थः पुराणः पुरुषोत्तमः ।
शाश्वतः शाश्वतानन्दः कैवल्योऽकेवलोऽकुलः ॥३॥

जगदीश्वर सूत्रात्मा वेदात्मा श्रुतिपारगः ।
कर्ताऽभोक्ता सदासाक्षी विधाता परमेश्वरः ॥४॥
त्रिकालस्थूलरूपज्ञ स्त्रिकालभ्रमकारकः ।
प्रथमः प्रथमशब्दः स्वप्रकाशः प्रकाशमान् ॥५॥
चराचरमयोऽमायी सततं मुनिचिन्तितः ।
एकरूपो बृहद्रूपः सरूपो रूपवर्जितः ॥६॥
सर्वशक्तिमयदेवः सर्वात्मा सर्वतोमुखः ।
परमः परमानन्दः सर्वेशः सर्वभावनः ॥७॥
गोपस्थो गोचरो गुप्तो गोपनीयो गुहाशयः ।
सर्वत्र सर्वगः सर्वः सुगमो दुर्गमोऽगमः ॥८॥
श्रीस्तुतः श्रीधरः श्रीदः शरणागतवत्सलः ।
सर्वसिद्धिप्रदः शक्तो विशिष्टनवसिद्धिदः ॥९॥
आधिव्याधिहरईशस्तापत्रयनिवारकः ।
भक्तानां परमोपायः सुखानन्दः सुखार्णवः ॥१०॥
हेमवर्ण श्चतुर्बाहु स्त्रिनेत्रो विशदप्रभः ।
पीताम्बरः श्वेतवासा कस्तूरीकुंकुमप्रियः ॥११॥
ज्ञानेश्वरो ज्ञानगम्यो ज्ञानविज्ञानचेतनः ।
ज्ञानाकारो ज्ञानमूर्तिः ज्ञानाज्ञानपरोऽपरः ॥१२॥
योगेन्द्रो योगिराट् योगी योगिनांशाश्वतालयः ।
कोमलः कुन्तलः कान्तः कामदः कामकारकः ॥१३॥
निर्ममो निष्क्रियोऽनन्तो निर्विकारो विकारकृत् ।
निष्कलो निस्पृहो मेध्यो निष्प्रपञ्चो निरास्पदः ॥१४॥
सर्वार्थः सर्वतोभद्रः सर्वकारणकारणम ।
अखिलो निखिलानन्दो बुद्धिदो बुद्धिसत्तमः ॥१५॥

सर्वश्रेष्ठगुणोपेतः कामाचारः समन्ततः ।
प्रवीणः कोविदः प्राज्ञः सर्वमङ्गलमङ्गलः ॥१६॥
निरालम्बो निरावासो निराभासो निराश्रयः ।
निरातंको निराकामो निराधारो निराकुलः ॥१७॥
जगत्कर्ता जगद्भर्ता जगद्धर्ता जगत्पतिः ।
जगत् त्राता जगच्छास्ता जगद्बन्धुर्जगत्पिता ॥१८॥
जितेन्द्रियो जितप्राणः सर्वाग्र्यः सर्वनायकः ।
सर्वकामप्रदः कामः पूर्णकामः परन्तपः ॥१९॥
श्वासोश्वासगतिर्यन्ता प्राणायामी पुरातनः ।
पञ्चप्राणपतिप्राणः प्राणदः प्राणवल्लभः ॥२०॥
अमूर्तोमूर्तिमान्मूर्तिस्तुरीयस्तमसःपरः ।
अजेयः सर्वजिज्जेता अक्षरात्मा क्षयोऽक्षयः ॥२१॥
स्वरव्यञ्जनवर्णात्मा शब्दो वाक्यं रसामृतं ।
वाक्पटु मूकवाचालो निपुणः कुशलोऽक्षमः ॥२२॥
अजरो निर्जरोऽमर्त्यः सदास्थायी सनातनः ।
अमरो विजरो भौमो नित्ययुक्तो निरञ्जनः ॥२३॥
भीष्मरूपधरो ऽघोरः सर्वविघ्नविनाशनः ।
सुमुखो दुर्मुखो धीरः शोकसंकटहारकः ॥२४॥
मन्त्रज्ञो यन्त्रतन्त्रज्ञः सर्वशास्त्रविदांवरः ।
श्रुतिवेदांगनिर्माता निगमागमदर्शनम् ॥२५॥
अलोको लोकपालेशो लौकिको लोकनन्दनः ।
नियन्ताऽसंख्यलोकानां सलोको लोकवर्जितः ॥२६॥
विश्वेश्वरो विश्वजीवो विश्वनेत्रो विशांपतिः ।
पूतात्मा पूतकृत्पुण्यः पुण्यशीलः परावरः ॥२७॥

भूधरो भूपति र्भूमा भरतो भारतेश्वरः ।
अल्पो हिमालयो विंध्यो जलस्थलविभाजकः ॥२८॥
अन्तानन्तो विशिष्टेष्टो जीवजन्तुनमस्कृतः ।
सदातुष्टः सदाशान्तः सदातृप्तः सदार्चितः ॥२६॥
महावीरो महेश्वासो महापूरषपूर्वजः ।
महादेहो महाबाहु र्महज्ज्योति र्महद्यशः ॥३०॥
महासीनो महाचित्तो महासत्त्वो महातपः ।
महानन्दो महाकायो महद्योनिर्महद्बलम् ॥३१॥
सत्यसङ्कल्पभारूपः सत्यकामो विभूषकः ।
सत्यदेवः सत्यशीलः सत्यरूपः सुदर्शनः ॥३२॥
भूतस्थः सर्वभूतात्मा प्रत्यक्षो ऽव्यक्तितः पृथक् ।
धीमयोऽसाध्यसंभाव्यः सत्यसन्धो महाजनः ॥३३॥
परं तत्वं परं ज्ञानं परं श्रेयः परंप्रभः ।
परं सत्यं परं धाम परंशान्तिः परंपदम् ॥३४॥
अणुरात्मा विराटात्मा सर्वव्यापी प्रबोधकः ।
अन्तस्थः परमाकाशश्चिदाकाशनिवस्थितः ॥३५॥
स्वयंजीवः स्वयंबीजं स्वयमात्मा स्वयंरतः ।
स्वयंस्रष्टा स्वयंभर्ता स्वंयविपरिणामकः ॥३६॥
त्रुटिः काष्टा लवो यामः पलं प्रहरो दिनं निशा ।
पक्षो मास ऋतुर्वर्षं कल्पो वेलान्तरं युगम ॥३७॥
स्वतन्त्रोऽनायत्तः स्वैरी आत्मतन्त्रोऽपरायत्तः ।
सकलं सकलानन्दः परानन्दः परोदयः ॥३८॥
कामेशः कर्मठोऽकर्ता पूर्णगर्भः कृषीवलः ।
स्वयंकर्मा स्वयंभोक्ता स्वयंद्रष्टा स्वयन्मयः ॥३९॥

भूतेश्वरो भूतयोनिर्गुहाचारो गुहास्थितः ।
सर्वाश्चर्यमयाश्चर्यं सर्वलोकप्रियंकरः ॥४०॥
सुलभो दुर्लभोऽलभ्यः सबलो दुर्बलो बली ।
अबला बालिका बाला प्रबलः पुरुषः पुमान् ॥४१॥
याचको धनवान् दीनो निर्धनो वसुमानृणी ।
प्रार्थकः प्रार्थना भिक्षा भिक्षुस्त्यागी बहुप्रदः ॥४२॥
कठोरः कर्कशो रूक्षो दुरावासो दुरासदः ।
समस्तम्लेच्छदुष्टघ्नः कृतघ्नाहितध्वंसकः ॥४३॥
निसङ्गो निष्पदोऽपादः प्राप्योऽप्राप्यश्चलोऽचलः ।
शक्तिदः कीर्तिदोऽधीशोऽलक्ष्यो लक्ष्यः सुलक्षणः ॥४४॥
करणं कारणं कर्म कर्माकर्मप्रवर्तकः ।
विबुधाग्रचरो ज्ञाता कार्मो मानसगोचरः ॥४५॥
शब्दाशब्दमयोनादः शब्दातीतो स्वात्मकः ।
प्रकाशो दीप्तिर्भातेजः प्रभातीतः प्रदीप्तिमान् ॥४६॥
अमोघवचनो व्योमा लोकमण्डलयोजकः ।
त्रपिष्ठो ललितोऽसक्तः स्वच्छन्दो विश्वमोहनः ॥४७॥
भक्तानांसुलभावाप्तिः श्रद्धास्तिक्यविवर्धकः ।
मोहको लोभनं लुभ्यः स्निग्धमुग्धोऽतिसुन्दरः ॥४८॥
सदानवः सदालोलः शुचिश्रेष्ठो विदुत्तमः ।
दिव्यभोगप्रदो भोगी भोगेन्द्रो भगवान् भगः ॥४९॥
आर्तदुःखहरस्त्राणो मदमोहमलापहः ।
अखण्डैश्वर्यसम्पन्नः सर्वश्रेयस्पतिपतिः ॥५०॥
सुनाथोऽनाथदीनानां सुकामःकामभोगिनां ।
सुमन्त्रंसर्वमन्त्राणां सुतन्त्रं सर्वतन्त्रिणाम् ॥५१॥

शक्तिबीजमयःशून्यः पंचतत्त्वपरात्परः ।
नवरूपमयोज्योतिरज्योति र्द्योतको द्युतिः ॥५२॥
बीजरूपो महद्गर्भः स्थावरो जङ्गमोऽण्डजः ।
श्रीमयो ह्रीमयः सौख्यमदोमय इदंमयः ॥५३॥
क्षेमानन्दः क्षमाभर्ता क्षमाशीलः क्षमाऽक्षमा ।
अध्यात्मविद्या विद्याग्र्यः पुराणछन्दसांवरः ॥५४॥
भेदाभेदः परं सूत्रं पतिपाशपशुत्रिकं ।
प्रकाशात्मा विमर्शात्मा शैवानांपुण्मीलनम् ॥५५॥
वेदान्तिनांनेतिनेति सांख्ययोगविदांगुरुः ।
आदिदेवोऽन्यधर्माणां जडमनात्मवादिनाम् ॥५६॥
आनन्त्यव्यापी सर्वज्ञो धियाःदुष्प्रापकीर्तितः ।
शीतलः शंमयः शांतः शांतभद्रः प्रसन्नभः ॥५७॥
दुर्जयो धूर्जयानन्दो नीतिज्ञो नीतिकृत् नयः ।
जयश्री जित्वरो जिष्णु र्जयदो जयवर्धनः ॥५८॥
क्षिप्रक्षेमकरः शुभ्रः शिवदः शांतिदः शमः ।
ऐश्वर्यशाली निर्लेपः कल्याणं मंगलं शुभम् ॥५९॥
स्थूलात्स्थूलतरस्थूलो विस्तरोऽव्यापकः प्रसूः ।
सूक्ष्मात्सूक्ष्मतरसूक्ष्मो नित्यानित्यविवस्थितः ॥६०॥
तडागस्तटिनी सिन्धुः कूपो नदनदीपतिः ।
उदध्यर्णवकंरूपः शून्यसागरमन्थकः ॥६१॥
स्वयंसिद्धिः स्वयंसाध्यः स्वयंसिद्धः स्वयंकरः ।
स्वयंकर्म स्वयंकर्ता स्वयमिष्टं स्वयंफलम् ॥६२॥
द्रव्यात्मको द्रव्यशीलो द्रव्यातीतः खमात्परः ।
आछादनंसुतत्त्वानां पंचभूतावगुण्ठनम् ॥६३॥

कल्लोलरहितोऽक्षुब्धो निःस्रोतो निश्चलः स्थिरः ।
बुद्धिज्ञानपरवादी सुविवादो विवेचनम् ॥६४॥
सार्धत्रिवलयं चक्रं मूलाधारश्चतुर्दलः ।
स्वाधिष्ठानो विशुद्धाज्ञाऽनाहतो मणिपूरकः ॥६५॥
आयुर्बलं यशो वर्चः सुस्थः स्वास्थ्यवर्धनः ।
नीरुजः शर्मदः शर्मोऽव्याकुलो हृदयंगमः ।६६॥
रमाप्रियो रमानाथ ईप्सितार्थफलप्रदः ।
पालकः पालनं गोपो रक्षिताकृमिकीटकः ॥६७॥
कौलेशः कौलसम्पूज्यः कौलेष्टः कौलवन्दितः ।
कौलानुगामिनांतातः कौलाचारनिरूपकः ॥६८॥
पुरोहितः पुरोभागी पद्माक्षः पद्मभूः पटुः ।
अक्षमालाधरो रम्यः पक्षापक्षविवर्जितः ॥६९॥
यशोधरो यशोमूर्तिः कामनीयः कलाधरः ।
यशस्वी प्रशस्यो दक्षः सानुरागः प्रियोऽप्रियः ॥७०॥
वरिष्टो वीरको वीरो वीरेशो वीरनन्दनः ।
निःशस्त्रः शस्त्रसम्पन्नो निरस्त्रः सन्नदः सदः ॥७१॥
वसन्तः शिशिरो घर्मः शरद्धेमन्तवर्षणं ।
ऋतुहर्ता ऋतुकर्ता ऋतुपर्ययकारकः ॥७२॥
आद्यमध्यान्तरहित आधाराधेयवर्जितः ।
सुधाकरः सुधाहारस्त्रिदिवातलपूजितः ॥७३॥
आन्वीक्षकीत्रयीवार्तादण्डनीतिनिवाहकः ।
शासनं शासकोऽलिप्तो धर्माध्यक्षोऽधिनायकः ॥७४॥
रतिज्ञो रतिनीतिज्ञो रतिशास्त्रविचक्षणः ।
रतिशीलो रतिपरः सुरतो विरतो रतिः ॥७५॥

नरेश्वरो नराराध्यो नरपूज्यो नरार्थदः ।
नरोत्तमो नरसेव्यो नरवन्द्यो नरोऽनरः ॥७६॥
नित्यविश्वमयोदेवो विश्वोत्तीर्णः सुविश्वभृत् ।
नित्यचिन्मयसामन्त श्चिन्त्योऽचिन्त्यः सुचिन्तितः ॥७७॥
उत्तमोत्तम ईशानः सुमदो निर्मदो मदः ।
सर्वाध्यक्षः सर्वकल्पः सर्वेशः सर्वतारकः ॥७८॥
एकमन्त्रमयो मन्त्री कालमन्त्रप्रकाशकः ।
मन्त्रमूलं मन्त्रवाक्यं मन्त्रज्ञो मन्त्रसाधकः ॥७९॥
अदःसेतुरिदंसेतुः सेतुर्धर्मसुदुर्गमः ।
आद्यन्तरहितःसेतुः सेतुर्खद्र व्यकालिनाम् ॥८०।
अग्रगण्यः प्रत्युत्पन्नः सुभगो भाग्यवर्धनः ।
अनुकामः प्रियकामो भामो मोदो बृद्धिप्रदः ॥८१॥
हं बीजं पृथिव्यालम्बः अंजलं प्रौढिरूपकः ।
लं अग्निर्वायुबीजं आं कं आकाश स्ततः परम् ॥८२॥
संकल्पो वाञ्छितमिष्टं धर्माधर्मो नृतानृतं ।
महाशयो महज्ज्योतिः स्वगाकारः परिवृढः ॥८३॥
यज्ञेश्वरो यज्ञमूर्ति नित्यंयज्ञप्रतिष्ठितः ।
अध्वर्यो होतृ उद्गाता याजको यजनं हविः ॥८४॥
कोषेशः कोषदः कोषो निधानं निधिनांपतिः ।
अर्धरात्रिजपं जाप्यो यथेष्टफलदोविभुः ॥८५॥
अलिङ्गोऽवचनो धाता स्वयंभूर्जनको भवः ।
नानारूपधरोऽरूपो ऽनन्तबाहुरनन्तदृक् ॥८६॥
शून्याधारो ऽशून्यशीलः शून्यगर्भः शमात्मकः ।
शून्यारूढः शून्यरूपः शून्याशून्यप्रतिष्ठितः ॥८७॥

दिगम्बरो दिव्यदेहो धर्मात्मा धार्मिकव्रतः ।
अन्तःसाक्षी बहिःसाक्षी सर्वसाक्षी अनुत्तरः ॥८८॥
सुबोधः सत्यप्रतिज्ञः श्रीप्रदः पुत्रपौत्रदः ।
आशापूरयिता दाता कुलसन्ततिवर्धनः ॥८९॥
अगम्योऽगोचरोऽभेद्यः सिद्धार्थः सुकलः स्वभूः ।
अपक्षीय उदासीनो दूरोऽदूरः समोऽसमः ॥९०॥
अतिरूपकरः सूग्रः शत्रुघ्नो रिपुसूदनः ।
शीततापहरोऽपापो दारुणः कटुः कीकसः ॥९१॥
आचार्यः शिक्षकः शिष्यः पितृदेवो गुरोर्गुरुः ।
मातृदेवः सुविश्वास्यो भक्तो भक्तजनोऽर्चकः ॥९२॥
नवमो नवमीनाथो नवांशो नवधो नवः ।
अनङ्गो हेमवर्णाङ्गः सुवर्णोऽवर्णवर्णकः ॥९३॥
अगाधः सुदृढः श्रीमान् वायुरूपो द्रवो जलं ।
अनलस्तत्त्वसंयुक्तो विमुक्तोऽसीमितोऽलघुः ॥९४॥
मेधादस्तुष्टिदस्तुष्टः सन्तुष्टो विश्रुतः शुचिः ।
अच्छेद्योऽलोलुपो न्याय्यः सुस्पृहो विमृत्युर्वशी ॥९५॥
विशुद्धलोचनो दर्शी वाङ्मनोगोचरातिगः ।
सर्वस्वं सर्वचैतन्यः स्वकृतः स्वधृतः स्वदः ॥९६॥
पिता पुत्रः स्वसा पुत्री माता भ्राता पितामहः ।
बन्धुर्मित्रं पतिः पत्नी सुसेव्यः कर्मकारकः ॥९७॥
समाजो निवहो वृंदं प्रजातन्त्रं प्रजापतिः ।
भूपति र्विषयो राष्ट्रं देशभक्तः स्वदेशभृत् ॥९८॥
अणिमादिगुणोपेतो गुणातीतो गुणात्मकः ।
सहजः सहनः सत्यं सुखदुःखविपर्ययः ॥९९॥

मनीषी मतिमान् विज्ञो वरेण्योऽकल्मषोऽनघः ।
गर्भदो गर्भदोषघ्नो बीजस्थो बीजवर्धनः ॥१००॥
शुभाशुभपरित्यागी अशुभशुभकारकः ।
तेजोराशिस्तमोहन्ता सर्वभूतमनोहरः ॥१०१॥
मुक्तहस्तोऽर्थशास्त्रज्ञः सावधानो निरीक्षकः ।
नवद्वारमयोदेहो देही देहभृतांवरः ॥१०२॥
कोटिसूर्यप्रतीकाशः कोटिचंद्रांशुनिर्मलः ।
कोटितारकनिर्माता कोटिलोकप्रयोजकः ॥१०३॥
अखण्डोऽलवशः कल्यः श्रवणं श्रावकः श्रुतिः ।
प्रमाणं प्रत्ययः पात्रमग्राह्यो ग्रहणं ग्रहः ॥१०४॥
दयाकरो दयारूपो दयामूर्तिर्दयापरः ।
सर्वपापप्रशान्तात्मा सर्वदुर्गतिहारकः ॥१०५॥
मनोजवो मरूद्वेगो भक्तानांपथनायकः ।
रणज्ञो रणक्षेत्रज्ञो युधं योधो भटोऽभटः ॥१०६॥
सौम्याननः सौम्यभावो भक्तिदो भक्तवत्सलः ।
सर्ववश्यकरोऽवश्यः सुसम्पन्नः समायकः ॥१०७॥
नित्यतृप्तो लसद्भावो विश्वपूर्णः सदाक्षमी ।
आशाश्रयोनिराशानां कृपालुः करुणाकरः ॥१०८॥
असंप्रज्ञातसंप्रज्ञो निष्णातोऽनश्वरोऽव्ययः ।
सारज्ञः सर्वधर्माणां लोकधर्मप्रवर्तकः ॥१०९॥
सुधामयः सदारामः श्रीघनो दृष्टिमोहनः ।
सूत्रधारो जगत्सूत्रं त्र्यक्षरो वागधीश्वरः ॥११०॥
क्षयापस्मारकुष्टघ्नो रोगारिष्टनिवारकः ।
स्वास्थ्यारोग्यप्रदः स्वस्थः सर्वामयप्रहारकः ॥१११॥

कर्ताऽकर्ताऽन्यथाकर्ताईश्वरः सर्वशक्तिमान् ।
युगकर्ता युगहर्ता अहोरात्रचतुर्युगम् ॥११२॥
हन्तापदां विपद्धर्ता सद्भोगनिलयोच्युतः ।
स्वभावः सद्गतिर्भावो निर्द्वन्द्वो द्वन्द्वरूपकः ॥११३॥
अनेकरूपवर्णाङ्गः ॥ पूर्वः ॥ पूर्वतरोत्तमः ।
पावनः पवनः पूतः पूतनामा शुचिव्रतः ॥११४॥
आशुगोऽनाशुगोऽदृश्यः पवित्रं विमलोऽमलः ।
सुपथः पथिकः पन्था भक्तिमार्गोपदेशकः ॥११५॥
आरण्यको वनस्थायी ब्रह्मचारी उपासकः ।
गृहस्थः पूजकः पूजा ठाकुरः कुलदेवता ।११६॥
मत्स्यस्तिमिंगिलो ग्राहः शुकः शारी विहगमः ।
गायक श्चित्रको गाथा शिल्पं शिल्पी नटोऽनटः ॥११७॥
विभ्रमो भ्रममोहघ्नः कल्पवृक्षोऽश्वत्थस्तरुः ।
विटपी वल्लरी पुष्पं पंक्ति वैर्गो बहुभुजः ॥११८॥
अतलो वितलव्यापी सुतलस्तलवर्जितः ।
अश्वः कुरंगमो धेनुः शरभः सस्तनः शिखी ॥११९॥
विज्ञानं ग्रहजिज्ञासा अनन्तानन्त्यमार्गणं ।
जीवाजीवो दृशो व्यक्तः परोक्षोऽव्यक्तसंकुलः ॥१२०॥
अद्वितीयतपोमूर्तिः स्वमायानित्यगोपितः ।
सर्वतीर्थमयस्तीर्थ मात्मतीर्थ निवस्थितः ॥१२१॥
आत्मज्ञ आत्मनिर्दिष्टा आत्मचिदात्मधीः सुधिः ।
आत्मजिदात्मसंतुष्ट आत्मास्वात्मप्रवर्तकः ॥१२२॥
विश्वश्लाघ्यो विश्वपूज्यो विश्ववंद्यो मुनीश्वरः ।
विश्वाराध्यो विश्वश्रेष्ठो विश्वेशो विश्वराड् ऋषिः ॥१२३॥

अकाय: कायसम्पन्नः परापरमयो महान् ।
विशोकोऽशोककौमारः सुरेशः सुप्रभः प्रभुः ॥१२४॥

॥ इति ॥

पूर्ववत्प्राणायामो न्यासश्च। अथ तर्पणम् ॥

तत्सत्काल अद्यतावत् तिथावद्य अमुकमासस्य अमुक पक्षे अमुक वारे श्रीकालः कालकालः अनन्तः अजरः अमरः अभयवरप्रदः सर्वदुःखघ्नः सर्वामयहर्ता सर्वसिद्धिकर्ता सर्वकामनाभिलाषपूरकः प्रीतः प्रीतोऽस्तु॥

कालोहम् ॥



कालकेन्द्रप्रकाशनम्–' जलाली निवास,
कर्णनगर, श्रीनगर ( कश्मीर )

